उन्मीलद्भुजगेन्द्रसद्मसुभगान्याविर्भवद्भूपति-
श्रीचिह्नानि जिनेक्षणागतसुरश्रेणीविमानानि च ।
पूजावर्जनसज्जदुन्दुभिरवोद्यावप्रमोदोदया-
दित्थं त्रीण्यपि यस्य जन्मनि जगन्त्यासन्स वोऽव्याज्जिनः ५१२
लोकवित्त्वे कवित्वे वा यदि चातुर्यचञ्चवः ।
सोमदेवकवेः सूक्तीः समभ्यस्यन्तु साधवः ॥ ५१३ ॥

इति सकलतार्किकलोकचूडामणेः श्रीमन्नेमिदेवभगवतः शिष्येण सद्योनवद्यगद्यपद्य-
विद्याधरचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्रीसोमदेवसूरिणा विरचिते
यशोधरमहाराजचरिते यशस्तिलकापरनाम्नि महाकाव्ये राजलक्ष्मीविनोदनो
नाम तृतीय आश्वासः समाप्तः ।

---

उन्मीलदित्यादि । स जगत्प्रसिद्धो जिनः श्रीमद्भगवदर्हत्सर्वज्ञवीतरागः वो युष्मान् अव्यात् रक्षतु । स कः । यस्य तीर्थंकरस्य परमदेवस्य जन्मनि जन्मकल्याणे··· पूजावर्जनसज्जदुन्दुभयः पटहास्तेषां रवाणां उद्याव उत्सवस्तस्य प्रमोदोदयः प्रादुर्भावस्तस्मात् इत्थं उक्तप्रकारेण त्रीण्यपि जगन्ति लोकाः आसन् बभूवुः । कथंभूतानि जगन्ति । उन्मीलद्भुजगेन्द्रसद्मसुभगानि उन्मीलन्ति पातालात् प्रादुर्भवन्ति यानि भुजगेन्द्रसद्मानि तैः सुभगानि । पुनः कथंभूतानि जगन्ति । आविर्भवद्भूपतिश्रीचिह्नानि आविर्भवन्ति मर्त्यलोके प्रादुर्भवन्ति यानि भूपतीनां चक्रवर्त्यादिनरेन्द्राणां श्रीणां लक्ष्मीणां चिह्नानि ध्वजच्छत्रचामरचन्द्रोपकादीनि येषु जगत्सु तानि तथोक्तानि । पुनः कथंभूतानि जगन्ति । जिनेक्षणागतसुरश्रेणीविमानानि जिनस्य वृषभादेरीक्षणमवलोकनं तदर्थमागता उपनता या सुरश्रेण्यः सुरसमूहास्तासां विमानानि येषु जगत्सु तानि तथोक्तानि । अतिशयसमुच्चयालंकारः ॥

लोकवित्त्वे इत्यादि । साधवो विद्वांसो यदि चेत् लोकवित्त्वे लोकव्यवहारपरिज्ञाने वा अथ वा कवित्वे कवीश्वरत्वे चातुर्यचञ्चवः चातुर्यनिपुणाः प्रवीणा वर्तन्ते । तर्हि श्रीसोमदेवाचार्यस्य सूक्तीः सुवचनानि समभ्यस्यन्तु अनुशीलयन्त्विति भद्रम् । समुच्चयालंकारः ॥

इति सकलतार्किकलोकचूडामणेः श्रीमन्नेमिदेवभगवतः शिष्येण सद्योनवद्यगद्यपद्यविद्याधरचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्रीसोमदेवसूरिणा विरचिते यशोधरमहाराजचरिते यशस्तिलकापरनाम्नि महाकाव्ये राजलक्ष्मीविनोदनो नाम तृतीय आश्वासः समाप्त इति । अस्य व्याख्या पूर्ववत् ज्ञातव्या ॥

इति श्रीपद्मनन्दिदेवेन्द्रकीर्तिविद्यानन्दिमल्लिभूषणाम्नायेन भट्टारकश्रीमल्लिभूषणगुरुपरमाभीष्टगुरुभ्रात्रा गुर्जरदेशसिंहासनभट्टारकश्रीलक्ष्मीचन्द्रकाभिमतेन मालवदेशभट्टारकश्रीसिंहनन्दिप्रार्थनया यतिश्रीसिद्धान्तसागरव्याख्याकृतिनिमित्तं नवनवतिमहामहावादिस्याद्वादलब्धविजयेन तर्कव्याकरणच्छन्दोऽलंकारसिद्धान्तसाहित्यादिशास्त्रनिपुणमतिना प्राकृतव्याकरणाद्यनेकशास्त्रचञ्चुना सूरिश्रीश्रुतसागरेण विरचितायां यशस्तिलकचन्द्रिकाभिधानायां यशोधरमहाराजचरितचम्पुमहाकाव्यटीकायां यशोधरमहाराजराजलक्ष्मीविनोदवर्णनं नाम तृतीयाश्वासचन्द्रिका परिसमाप्ता इति शुभम् ॥

---